# ॥ तारसारोपनिषत् ॥

(शुक्लयजुर्वेदीया)

यन्नारायणतारार्थसत्यज्ञानसुखाकृति ।
त्रिपान्नारायणाकारं तद्ब्रह्मैवास्मि केवलम् ॥

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

हरिः ॐ ॥

(अविमुक्तोपासनोपदेशः)

बृहस्पतिरुवाच याज्ञवल्क्यं यदनु कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनं तस्माद्यत्र क्वचन गच्छेत्तदेव मन्येतेति । इदं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम् । अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृतीभूत्वा मोक्षी भवति । तस्मादविमुक्तमेव  निषेवेत । अविमुक्तं न विमुञ्चेत् । एवमेवैष भगवन्निति वै याज्ञवल्क्यः ॥ १॥

(नारायणस्थूलाष्टाक्षरतारकम्)

अथ हैनं भारद्वाजः पप्रच्छ याज्ञवल्क्यं किं तारकम् । किं तारयतीति । स होवाच याज्ञवल्क्यः । ॐ नमो नारायणायेति तारकं चिदात्मकमित्युपासितव्यम् । ओमित्येकाक्षरमात्मस्वरूपम् । नम इति द्व्यक्षरं प्रकृतिस्वरूपम् । नारायणायेति पञ्चाक्षरं परंब्रह्मस्वरूपम् । इति य एवं वेद । सोऽमृतो भवति । ओमिति ब्रह्मा भवति । नकारो विष्णुर्भवति । मकारो रुद्रो भवति । नकार ईश्वरो भवति । रकारोऽण्डं विराड् भवति । यकारः पुरुषो भवति । णकारो भगवान्भवति । यकारः परमात्मा भवति । एतद्वै नारायणस्याष्टाक्षरं वेद परमपुरुषो भवति ।
अयमृग्वेदः प्रथमः पादः ॥ १॥

(नारायणसूक्ष्माष्टाक्षरतारकम्)

ॐइत्येतदक्षरं परं ब्रह्म । तदेवोपासितव्यम् । एतदेव
सूक्ष्माष्टाक्षरं भवति । तदेतदष्टात्मकोऽष्टधा
भवति । अकारः प्रथमाक्षरो भवति । उकारो द्वितीयाक्षरो भवति ।
मकारस्तृतीयाक्षरो भवति । बिन्दुस्तुरीयाक्षरो भवति । नादः
पञ्चमाक्षरो भवति । कला षष्ठाक्षरो भवति । कलातीता
सप्तमाक्षरो भवति । तत्परश्चाष्टमाक्षरो भवति ।
तारकत्त्वात्तारको भवति । तदेव तारकं ब्रह्म त्वं विद्धि ।
तदेवोपासितव्यम् ॥ १॥

(प्रणवावयवदेवताः)

अत्रैते श्लोका भवन्ति ॥

अकारादभवद्ब्रह्मा जाम्बवानितिसंज्ञकः ।
उकाराक्षरसंभूत उपेन्द्रो हरिनायकः ॥ १॥

मकाराक्षरसंभूतः शिवस्तु हनुमान्स्मृतः ।
बिन्दुरीश्वरसंज्ञस्तु शत्रुघ्नश्चक्रराट् स्वयम् ॥ २॥

नादो महाप्रभुर्ज्ञेयो भरतः शङ्खनामकः ।
कलायाः पुरुषः साक्षाल्लक्ष्मणो धरणीधरः ॥ ३॥

कलातीता भगवती स्वयं सीतेति संज्ञिता ।
तत्परः परमात्मा च श्रीरामः पुरुषोत्तमः ॥ ४॥

(श्रीरामस्य सर्वात्मकत्वम्)

ओमित्येतदक्षरमिदं सर्वम् । तस्योपव्याख्यानं भूतं
भव्यं भविष्यद्यच्चान्यत्तत्त्वमन्त्रवर्णदेवताछन्दो
ऋक्कलाशक्तिसृष्ट्यात्मकमिति । य एवं वेद ।
यजुर्वेदो द्वितीयः पादः ॥ २॥

(जाम्बवदाद्यष्टतनुमन्त्राः)

अथ हैनं भारद्वाजो याज्ञवल्क्यमुवाचाथ कैर्मन्त्रैः
परमात्मा प्रीतो भवति स्वात्मानं दर्शयति तन्नो ब्रूहि
भगव इति ।

स होवाच याज्ञवल्क्यः ।

ॐ यो ह वै श्रीपरमात्मा नारायणः स भगवानकारवाच्यो
जाम्बवान्भूर्भुवः सुवस्तस्मै वै नमोनमः ॥ १॥

ॐ यो ह वै श्रीपरमात्मा नारायणः स भगवानुकारवाच्य
उपेन्द्रस्वरूपो हरिनायको भूर्भुवः सुवस्तस्मै वै नमोनमः ॥ २॥

ॐ यो ह वै श्रीपरमात्मा नारायणः स भगवान्मकारवाच्यः
शिवस्वरूपो हनूमान्भूर्भुवः सुवस्तस्मै वै नमोनमः ॥ ३॥

ॐ यो ह वै श्रीपरमात्मा नारायणः स भगवान्बिन्दुस्वरूपः
शत्रुघ्नो भूर्भुवः सुवस्तस्मै वै नमोनमः ॥ ४॥

ॐ यो ह वै श्रीपरमात्मा नारायणः स भगवान्नादस्वरूपो
भरतो भूर्भुवः सुवस्तस्मै वै नमोनमः ॥ ५॥

ॐ यो ह वै श्रीपरमात्मा नारायणः स भगवान्कलास्वरूपो
लक्ष्मणो भूर्भुवः सुवस्तस्मै वै नमोनमः ॥ ६॥

ॐ यो ह वै श्रीपरमात्मा नारायणः स भगवान्कलातीता
भगवती सीता चित्स्वरूपा भूर्भुवः सुवस्तस्मै वै नमोनमः ॥ ७॥

यथा प्रथममन्त्रोक्तावाद्यन्तौ तथा सर्वमन्त्रेषु द्रष्टव्यम् ।
उकारवाच्य उपेन्द्रस्वरूपो हरिनायकः २ मकारवाच्यः
शिवस्वरूपो हनुमान् ३ बिन्दुस्वरूपः शत्रुघ्नः ४ नादस्वरूपो
भरतः ५ कलास्वरूपो लक्ष्मणः ६ कलातीता भगवती सीता
चित्स्वरूपा ७ ॐ यो ह वै श्रीपरमात्मा नारायणः स भगवांस्तत्परः
परमपुरुषः पुराणपुरुषोत्तमो नित्यशुद्धबुद्धमुक्तसत्य-
परमानन्ताद्वयपरिपूर्णः परमात्मा ब्रह्मैवाहं रामोऽस्मि
भूर्भुवः सुवस्तस्मै नमोनमः ॥ ८॥

(विद्यापठनमन्त्रार्थज्ञानयोः फलम्)

एतदष्टविधमन्त्रं योऽधीते सोऽग्निपूतो भवति । स वायुपूतो
भवति । स आदित्यपूतो भवति । स स्थाणुपूतो भवति । स सर्वैर्देवैर्ज्ञातो
भवति । तेनेतिहासपुराणानं रुद्राणां शतसहस्राणि जप्तानि फलानि

भवन्ति । श्रीमन्नारायणाष्टाक्षरानुस्मरणेन गायत्र्याः
शतसहस्रं जप्तं भवति । प्रणवानामयुतं जप्तं भवति ।
दशपूर्वान्दशोत्तरान्पुनाति । नारायणपदमवाप्नोति य एवं वेद ।
तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ।
तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥

इत्युपनिषत् ॥

सामवेदस्तृतीयः पादः ॥ ३॥

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

इति तारसारोपनिषत्समाप्ता ॥